PRINTED BOOK

① विषय - ज्योतिष

पेज - 2 (2-3) 32×12×0.1 cm

केन्द्रचतुष्टयकंटकसंज्ञालग्नास्तदशचतुर्थानां

मृदुबाहु धूनीप्रियशाखस्तनु वृत्तंश्चंद्रमाः क्रोशु

② विषय - पुराण पेज - (3, 54-55) = 3

31×13×0.1 cm

यं इतिदुपदामंत्रव्याख्या सूर्योपस्थानं तत्रछंदोगपरिशिष्टे

~~प्रथमाहितं धनदातारं मार्गे स्तौमि ततो अयम~~

48

## THE VEDIC PATH

Quarterly Journal of Vedic, Indological and Scientific Research
Gurukula Kangri Vishwavidyalaya,
HARDWAR

To,

*If not delivered, please return to :*
Dr. R. L. Varshney
*Editor, Vedic Path*
'Dreamland'
P. O. Gurukula Kangri-249 404
HARDWAR, U. P., INDIA.

२

2

सामयजुर्याधीपा गुरुसौम्यभौमसिता ॥२॥ जीवसितौ विप्राणां क्षत्रस्यारो रविः सवैश्यांचन्द्रः ॥ शूद्राधिपः शशिसु
तः शनैश्चरः संकरभवानां ॥३॥ निशामुखसौनरश्चिन्द्वलीयान भृगुर्निसि पितृकुजतो निशाते ॥ प्रातर्बुधा मध्य
न्दिने दिनेशः शनिर्निनौ तौ धिषणस्वस्त्वे ॥४॥ बलवान्मित्रस्वगृहोच्चस्वनवांशादृवीलिनः शुभेचापि॥
चंद्रसितौ स्त्रीसंज्ञौ पुरुषास्त्वपगाः शेषाः ॥५॥ प्राच्यादिषु जीवबुधौ सूर्यारौ भास्करी शशांकशितौ ॥६॥ उदगय
नेप्राप्तश्चेष्टौ वक्रेऽन्यत्विन्दुगौ विपुलाश्मी ॥७॥ ग्रहनिपितार्द्धेस्युरस्याद्य निसितो नक्रमिन्द्र कुजसौराः॥ स्वदि
नार्द्धवसदृष्टे शुभमशुभावहुलेन रपलयावलिनः ॥८॥ मदारसौम्यवाक्पतिसितचंद्रार्कायथोत्तरं बलिनः॥ नै
सर्गिकबलमनल्पं सामर्थ्यादृग्धिकबलचिता ॥९॥ मित्रेस्त्रेत्रेस्तोच्चेस्वहोरापांसुभवने त्रिकोणे च॥ स्वद्रे
क्काणे स्वांशे स्वादिने च बलान्विताः सर्वे ॥१०॥ दशम तृतीय नवपंचमचतुर्थाष्टमकलत्रमः॥ पश्यन्ति पादवृ
द्ध्याफलानि चैवं प्रपश्यन्ति ॥११॥ पूर्णं पश्यति रविजः त्रितीयदशमत्रिकोणमपि जीवः ॥ चतुरस्त्रं मा[मि]सुतः

वृहज्जेष्ठलघुजातक
लिखे

५

सितार्कौ बुधहिमकरावन्त्यश्च ॥ ५ ॥ इति श्री वाराहमिहिरकृतौ ग्रहस्वरूपाध्यायः ॥ ३ ॥ मित्राण्यर्काज्जीवो ज्ञगुरू
शशिनो विभास्कराः विकुजा ॥ विन्द्वर्का विकुजरवीन्दुवृषस्य केषांचिद्रिपोऽन्ये ॥ ३ ॥ शत्रू मंदसितौ समश्च शशिजो
मित्राणि शेषा रवेः ॥ तीक्ष्णांशुर्हिमरश्मिजश्च सुहृदौ शेषाः समाः शीतगोः ॥ जीवेन्दूष्णकराः कुजस्य सुहृदो ज्ञो
ऽरिः सितार्की समौ ॥ मित्रे सूर्यसितौ बुधस्य हिमगुः शत्रुः समाश्चापरे ॥ ४ ॥ सूरेः सौम्यसितावरी रविसुतो मध्यो
परे त्वन्यथा ॥ सौम्यार्की सुहृदौ समौ कुजगुरू शुक्रस्य शेषावरी ॥ शुक्रज्ञौ सुहृदौ समः सुरगुरुः सौरस्य चान्येऽरयः
तत्काले च दशायबंधुसहजस्वान्त्येषु मित्रं स्थिता ॥ ५ ॥ मित्रमुदासीनोरिर्व्याख्याता ये निसर्गभावेन तेऽपि
तु हि मित्रसमास्तत्काले समुपस्थिता चिंत्या ॥ ६ ॥ इति श्री वाराहमिहिरकृतौ मित्रामित्रविभागस्तृतीयो
ध्यायः ॥ ४ ॥ वक्रस्यौनान्स्य चास्तमनुकेशः पदनिकोस्थितसाराख्यः ॥ उच्चसमधुपिंगलासौरक्तस्यामः पटुस्वाङ्गः ॥ १ ॥ सदः
प्रांतोगौरस्य पलाः कुटकवान्निकोधिसाराख्यः ॥ मदुवाक् घुणिपित्तश्रमवसान्नवातांशः दृमाः प्रांशु ॥ २ ॥ हिंस्रोऽह

तेजस्वी

विरूपा

यं इति द्रुपदा मंत्रव्याख्यो सूर्योपस्थाने तत्र छंदोगपरिशिष्टे कात्यायनः उत्थायार्कं प्रतिप्रोहेत्त्रि
केणांजलिनांभसः तच्चित्रमृगद्वयेनैवउपतिष्ठेदनंतरं संध्याद्वयेप्युपस्थानं एवमाहुर्मनीषिणः
मध्यान्हे उदृच्येचैवविभ्राडादीश्च याजयेत् तदसंसक्तपार्ष्णिर्वा एकपादर्ध्यपादपि जयेत्कृतांज
लिर्वापि ऊर्ध्वबाहुरथापि वा यत्रस्यात्कृछ्रभूयस्त्वं श्रेयसोपि मनीषिणः भूयस्त्वं ब्रुवतेतत्र कृ
छ्राच्छ्रेयो ह्यवाप्यते योगियाज्ञवल्क्यः गायत्र्यास्तु जपं कृत्वा पूर्वं चैव यथाविधि उपस्थानं स्वके
र्मंत्रैरादित्यस्य तु कारयेत् उदुत्यं चित्रं देवानां मद्वयं तमसस्परि तच्चक्षुर्देव इति च एकचक्रेति वै
ऋचा उदगादित्ययं मंत्र आकृष्णेनेति वै ऋचा दृष्टेन सप्रयुंजीत शक्त्यान्यानि जपेत्सदा श्रुतिः
उदुत्यं जातवेदसमिति सप्तकृत्व आदित्योपस्थानादिह कृतैः पूर्वकृतैश्च पापैर्मुच्यते तत्र उ
दुत्यमित्याद्यैकैव कंडिकास्त्रृयप्रठितव्या हारीतः आकृष्णेनेत्यादित्यमुपतिष्ठन्सर्वपूतात्मा
भवति व्यासः उदुत्यं जातवेदेति ऋषिः प्रस्कण्व उच्यते छंदो गायत्रमेवास्य सूर्यो दैवतमे
वच अग्निष्टोमउपस्थाने विनियोगस्तथैवच चित्रं देवेति मंत्रस्य ऋषिः कौत्स उदाहृतः तष्टु
प्छंदो दैवतं च सूर्योस्याः संप्रकीर्तितः अग्निष्टोमउपस्थाने विनियोगस्तथैवच ततस्माय

शिव:
३०

धा ४x

योजनं तत्र द्रुपदामंत्रो यथा ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव पूतं पवित्रेणेवा
ज्यमापः शुंधंतु मैनसः अस्यार्थः आपो जलानि मां एनसः पापात् शुंधंतु शोधयंतु प
वित्रीकुर्वंतु अत्र दृष्टांतमाह यथा स्विन्नो घर्म्मोपहतः पुरुषः द्रुपदात् वृक्षमू
लं प्राप्य मुमुचानः त्यक्तवान् किं त्यक्तवान् अर्थवशात् स्वेदमेव त्यक्तवान् तथा मां आपः ए
नसः शुंधंतु द्वितीयं दृष्टांतमाह यथा स्नातः पुरुषः मलात् कायमलात् शुद्धो भवति तथा आ
पः एनसः पापात् शोधयंतु तृतीयं दृष्टांतमाह यथा आज्यं घृतं पवित्रेण प्रादेशपरिमि
तकुशपत्रद्वयेन उत्पवनेन पूतं भवति तथा मां आपः पवित्रीकुर्वंतु द्रुपदं वृक्षमूलं स
पूलो पंचमीति पंचमी मुमुचान इति मुच्लृ मोक्षणे इत्यस्य लिटि कानचि कोर्थः लिटः का
नज्वेति कानचा लिटि छंदसि लिटिति छंदसि विहितस्य धातोरूपं तदयमस्य मंत्रस्य भावार्थः
यथा घर्म्मोपहतस्य वृक्षछायाश्रयणात् घर्म्मोपशमो भवति यथा वा स्नानात् देहमलापग
मः स्यात् यथा वा पवित्रेणाज्यं पवित्रीक्रियते तथा आपः मां पवित्रीकुर्वंतु द्रुपदामंत्रमात्र
स्य अघमर्षणमंत्रस्य च व्याख्यामात्रं तं मा च मध्याह्नस्नाने एवालिखितं पितनैवानुसंधे

अस्यार्थः हे शाखे त्वा त्वां इषे वृष्ट्यै छिनद्मि इति ऊर्जे त्वा इति द्विपदास्मदुत्तरो मंत्रः देवमनुष्टुप् ४॥

निर्मितं धनं ददात्विति इत्यग्निमीलेमंत्रव्याख्या यजुर्वेदादिमंत्रस्य परमेष्ठी प्रजापतिऋषिः शाखावत्स
गावो देवता यजुष्टुप्छंदो नास्ति शाखाच्छेदनसन्नमनवत्सापाकरणेषु शाखयाँसो पस्पर्शने विनियो
गः मंत्रो यथा ॐ इषेत्वोर्जेत्वावायवस्थदेवोवः सविताप्रार्पयतुश्रेष्ठतमायकर्मणे इषेत्वा इति द्विप
दस्मदुत्तरो मंत्रः देवमनुष्टुप् अस्यार्थः हे शाखे त्वा कोर्थः त्वां ऊर्जे रसाय सन्नमयामि अत्र मंत्रद्वये छिन
द्मि सन्नमयामीति यथाक्रमं क्रियापदमध्याहरणीयं वायवस्थ इति द्विपदस्मदुत्तरो मंत्रः अस्यार्थः
हे वत्साः वायवस्थ यथा वायुर्वृष्ट्यादिद्वारेण जगतामाप्यायकः तथा यूयं धेनुप्रस्रवद्वारेण यज्ञनि
ष्पत्तिकारिणः यज्ञाद्वृष्टिरिति परंपरया जगतामाप्यायकाः स्थ भवथ देवो वः सवितेत्याद्यवशिष्टा
न्तरात्मको परो मंत्रः देवो नादिगुणयुक्तः वो युष्मान् कर्मणे यज्ञाय प्रार्पयतु किंभूतो देवः सविता
जगतां प्रसविता किंभूताय कर्मणे श्रेष्ठतमाय अतिश्रेष्ठाय अत्र इषे इति इषु इच्छायामित्यत्र सं
पदादित्वात्क्विप्प्रत्ययः तेन इषुशब्दस्य हलंतस्य व्युत्पत्तिः अनेन च सर्वेषां इष्यमाणानां यावदिष्ट
अन्ने यथाश्रुतिर्वृष्टेस्तदाह यदाह इषे त्वेति वृष्टिः सर्वेणैवेष्यते इष इति तादर्थ्ये चतुर्थीत्वात् इति
द्वितीयैकवचने युष्मच्छब्दस्थाने त्वामौ द्वितीयाया इति त्वादेशः वृष्ट्यर्थं त्वां शाखां छिनद्मीत्यर्थः

यत्तु नरत्नादि दर्भाः पवित्रमित्युक्तमिति ... स्मृतिदर्पणात् ५१

4

धीयीत त्वा ध्यायामिति स्मृतिनिर्दर्शनात् पवित्रपदं दर्भमात्रं वदतीति केचिद्वदंति तन्न शिष्टाचारविरुद्धं यतः
सर्वएवानुष्ठातारः प्रादेशमात्रत्वादिलक्षणमुक्तमेव पवित्रं गृहीत्वा ब्रह्मयज्ञं कुर्वंति पवित्रपदं ता
दृशमेवयुक्तं तथा दक्षिणोत्तरौ पाणी संधायेति पाणी इति द्विवचनेनैव दक्षिणवामहस्तयोरुपा
दानेसिद्धे दक्षिणोत्तरावित्यभिधानात् दक्षिणहस्त उत्तर उपरिभावी ययोर्हस्तयोस्तौ दक्षिणोत्तरावि
तिवोद्धव्यं एवं सति प्राङ्मुखः प्रागग्रेषु कुशेषूपविश्य वामहस्ततले कुशपवित्रं कृत्वा तदुपरि दक्षि
णहस्तमधोमुखं दत्वा ओंकारपूर्विकां गायत्रीं पठित्वा वेदादीन्मंत्रान्पठेत् तत्र ऋग्वेदादि
मंत्रस्य मधुच्छंद ऋषिरग्निर्देवता गायत्री छंदः स्वाध्याये विनियोगः मंत्रो यथा ओं अग्निमीळे पुरोहि
तं यज्ञस्य देवमृत्विजं होतारं रत्नधातमं अस्यार्थः अग्निं देवं ईळे स्तौमि किंभूतं पुरोहितं पुरः
प्रथमतोहितं स्थापितं आर्ध्वितामिति यावत् पुनः किंभूतं यज्ञस्य ऋत्विजं यजमानानुरोधेनया
गकारी ऋत्विक् अग्निश्च यजमानाभ्युदयाय यागकारी ऋत्विग् गच्छते अपि किंभूतं होतारं हो
मस्यप्रधानसाधनेन कर्तृभूतं पुनः किंभूतं रत्नधातमं रत्नं सुवर्णादि तद्दधातीति रत्नधाः
अतिशयेन रत्नधा रत्नधातमः तदयं वाक्यार्थः प्रथमाहितं धनदातारं अग्निं स्तौमि ततोऽप्ययम